योगित्वे वा नञुत्तरस्याधिकरणत्वेन नञो वा अभाववति लक्षणा विभक्त्यर्थानुयोगिसमानविभक्तिकस्यैवा-

स्यैवोपेयतया तादृशसम्बन्धस्य चाभावप्रतियोगितानवच्छेदकतया असामञ्जस्यं तथाच घटो नेत्यादौ प्रतियोगित्वस्य सुपर्थतामते न काचिदनुपपत्तिः। नञर्थाभावानुयोगिकप्रतियोगिवाचकपदोत्तरविभक्त्यर्थाभावस्य नञा अबोधनात् नेदं चैत्रस्येतिवत्तादृशाभावतात्पर्य्येण न घटो नेत्यप्रयोगादतः प्रथममतेऽस्वरसोनास्ति परन्त्वनुयोगित्वस्याप्युक्तस्थले सुवर्थता सम्भवतीति तस्य सुवर्थताकल्पानुसरणं, एतावता नञर्थे प्रतियोगिनः साक्षाद्विशेषणत्वं निराकृत्य भूतलं न घटः न पचति चैत्र इत्यादौ नञर्थस्यानुयोगिनि भेदेन साक्षात्तथात्वं निराकरोति, 'नञुत्तरस्येति, सुप इत्यनुषज्यते, निपातोत्तरविभक्तेर्निरर्थकतामतानुसारेणाह, 'नञो वेति, 'अभाववति लक्षणेति, तथाच नञर्थेनानुयोगिनोऽभेदान्वय इति भावः। न च निपातोत्तरप्रथमाविभक्तेरेव सर्व्वत्रोपगमात् भूतलं न घट

भूतले न घट इत्यादौ प्रथमार्थस्यानुयोगित्वस्य नञर्थे अधिकरणत्वेनान्वयः घटाभावो न घटः इत्यादौ तु प्रतियोगित्वेनान्वयस्तत्र प्रकरणादिकमेव नियामकं सप्तम्याद्यर्थस्यानुयोगित्वस्य नञर्थेऽधिकरणत्वेनान्वये सप्तम्यादेर्विशेषणविभक्तित्वं तन्त्रं यत्र तु षष्ठीविनिमयविभक्तिस्तत्र तदर्थस्यानुयोगित्वस्य नञर्थे प्रतियोगित्वेनैवान्वयः, अतएव अयमभावो न घटस्येत्यादौ अभावे घटानुयोगित्वाभावः प्रतीयते न तु घटाभावस्यानुयोगिकत्ववान् अभावइति नञुत्तरस्य सुपोऽधिकरणत्वं, तत्र च लक्षणा इत्युभयकल्पनापेक्षया श्रूयमाणनञोऽभाववल्लक्षणा युक्ता इत्याशयेनाह, 'नञोवेति।

न्योन्याभाव-संसर्गाभावयोर्बोधने नञोऽसामर्थ्यं, तेन न

इत्यादौ भूतलादिपद-नञ्पदयोः समानविभक्तिकत्वेऽपि नानु-याजेषु यजतिष्वित्यादौ नञः सप्तम्यन्तताविरहेण यजत्यादिपद-समानविभक्तिकताविरहात् तदर्थस्याभाववतो यजत्यादावभेदान्वया-सम्भव इति वाच्यम्। निपातोत्तरं सर्व्वविभक्त्युत्पादाभ्युपगमात्। अतएवैवकारवादे पृथिव्यामेव गन्ध इत्यादौ एवकारोत्तरसप्तम्यर्थ-व्यवच्छेदबोधो दीधितिकृतैवाभिहितः। कथं न पचति इदं न राज्ञ इत्यत्र प्रतियोग्यनुयोगिभावसम्बन्धेन न कथं विभक्त्यर्थविशे-षितभेदबोधः न कथं वा भूतलं न घट इत्यादौ भूतलादौ घटादिसंसर्गाभावबोधः नञर्थसंसर्गाभावे घटादिपदोत्तरप्रथमाया-घटादिप्रतियोगिकत्वस्य नञ्पदोत्तरप्रथमायाश्चाभावाधारत्वस्य भूत-लादौ बोधनसम्भवादित्याह, 'विभक्त्यर्थेति विभक्त्यर्थान्योन्याभावस्य समानविभक्तिकपदार्थयोः संसर्गाभावस्य बोधने नञो न सामर्थ्य-

---

यत्तु विशेषणादिशिष्टपदयोर्विरुद्धविभक्तिराहित्यं अन्योन्याभावबोधे प्राङ्नियामकमुक्तं तत्र विरुद्धत्वं विरुद्धार्थकत्वं अन्यथा अव्ययस्थले कर्म्म-त्वाद्यर्थकप्रथमान्तार्थस्य शुद्धप्रथमान्तार्थेन नञोऽन्योन्याभावबोधापातात् तथाच यथा ब्राह्मणस्य धनं न मूर्खस्य इत्यादौ नञर्थे भेदे मूर्खानुयोगित्वस्य बोधे नञर्थस्याधिकरणत्वेनान्वये मूर्खभिन्नस्य ब्राह्मणस्येत्यर्थो लभ्यते तथा प्रतियोगिपदोत्तरस्य सुपः प्रतियोगित्वादौ लाक्षणिकत्वेऽनुयोगिपदस्य शुद्ध-सुबन्तत्वे विरुद्धार्थकत्वमेव विभक्तेरिति प्रागुक्तनियामकासम्भवात् अनियमेन सुवर्थप्रतियोगित्वादेरिव तिङादि-षष्ठ्याद्यर्थकृतिसम्बन्धादेरपि नञर्थेऽन्यो-न्याभावे साक्षादन्वयेन न पचति न राज्ञ इत्यादौ कृति-सम्बन्धयोर्भेदबोधा-

पचति न राजा इत्यादौ क्रत्यादेरन्योन्याभावो भूतलं न घट इत्यादौ घटादेः संसर्गाभावो न प्रतीयते इत्याहुः

इति महामहोपाध्यायश्रीरघुनाथशिरोमणिभट्टाचार्य्य-
विरचितं नञ्वादरहस्यं सम्पूर्णं ।

---

मित्यर्थः । अथाभर्थ्यस्य तादृशतादृशप्रतियोग्यनुयोगिवाचकपदाभ्यां नञ्पदसमभिव्याहारभानस्य तादृशफलानुत्पादकतया तत्कारणता-नुपगमादिति भावः । 'आहुरित्यस्वरससूचनाय स च प्रथमा-विभक्त्या षष्ठ्याद्यतिरिक्तार्थबोधने तस्या असाधुत्वापत्तेरिति ।

इति महामहोपाध्याय-श्रीगदाधरभट्टाचार्य्यविरचिता
नञ्वादटिप्पनी समाप्ता ।

---

पत्तिः, एवं नञर्थे संसर्गाभावे भेदान्वयोपपत्त्यर्थमनुयोगिपदे सप्तम्यपेक्षा स च नञुत्तरस्य सुपोऽधिकरणत्वेन लक्षणयैवोपपन्न इति नञोऽभाववक्ता-त्पर्यकत्वे तु भेदान्वयप्रसक्त्यभावात् अभेदान्वये सप्तम्या अप्रयोजकत्वं इति व्याख्यान्तरं अत्यन्तसमीचीनं ।